श्री

# भक्तानन्द तरङ्गिणी.

दरभङ्गा मण्डलान्तर्गत परमाना ग्राम निवासि मैथिल पण्डित गोवर्द्धनशर्मसूनुना उन्नाव खत्रीजातीयसंस्कृतपाठशाला प्रधानाध्यापक व्याकरण तीर्थोपाध्याय पण्डित झोपाख्य श्रीयुत विद्यानाथ शर्म्मणा

विरचिता

उन्नाव ( अवध ) प्रान्तस्थ मौरावां ग्रामनिवासिना श्रीयुत लाला शङ्करसहाय तालुकदार महोदय द्रव्यव्ययेन

कानपुर

पण्डित उमादत्त बाजपेयी द्वारा ब्राह्मण यन्त्रालये मुद्रयित्वा प्रकाशिता।

प्रथमबार १००० ] सन् १९१६ ई०






ालय

उन्नाव (अवध)

पुस्तक मिलने का दूसरा पता—

**श्री हरिबंश झा**

मु॰ परमाना

पो॰ हथौरी

ज़ि॰ दरभंगा

# Bhaktanand Tarangini

OR

## Devotee's Pleasure

BY

PANDIT VIDYANATH JHA

Vyakaranateerth, Upadhyaya,
HEAD SANSKRIT TEACHER,

*Khatree Sanskrit Pathshala, Unao.*

PUBLISHED UNDER THE KIND PATRONAGE OF

**Lala Shankar Sahay Taluqdar,**

Mauranwan, District Unao (Oudh).

PRINTED BY

Umadatta Vajapayee,
At the BRAHMAN PRESS—CAWNPORE.

1916.

Price 4 As.

# भूमिका ।

प्रिय महाशयगण !

इस दुर्लभ भारत भूमि व सुन्दर मनुष्य शरीर पाकर चौरासी लाख योनियों में वार बार जन्म व मरण रूप महादुःखों का निवारण करनाही मनुष्यो का परम कर्तव्य ( मुख्य काम ) है परन्तु आत्मज्ञान अर्थात् स्वरूप परिचय रूप मोक्ष लाभ के विना उक्त दुःखों की निवृत्ति असम्भव है क्योंकि मोक्ष के अधिष्ठाता (मालिक) जो परमात्मा भक्त वत्सल भगवान श्री कृष्ण हैं वह सिवाय अपने भक्तों के और दूसरों को मुक्ति नहीं देते हैं इसलिए मोक्ष पदवी को पहुंचाने वाली एक भक्तिही सबसे सुगम मार्ग है वह भक्ति "श्रवण, कीर्तन, स्मरण, पादसेवन, अर्चन, वन्दन, दास्य, सख्य, आत्मसमर्पण, ये ९ नौ प्रकार की है जैसा कहा है "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्य मात्मनिवेदनम् ॥,, इनमें एक एक भी इष्टार्थसाधक है इसलिए मैंने सरल संस्कृतभाषाबद्ध 'भक्तानन्द तरङ्गिणी नामका श्रीकृष्ण सम्बन्धी कुछ (११५) श्लोक निर्म्माणकर आनन्दकन्द परमात्मा श्रीकृष्णजी में अर्पण किया है जिसको आद्योपान्त श्रवण करने से तथा नित्य पाठ करने से आशा है कि भगवद्भक्ति हृदय में अवश्य अंकुरित होजायगी इसमें प्रमाद वश यदि कोई बात की त्रुटि होगई हो तो क्षमाकर महानुभाव विद्वान् लोग उसको समर्थन करें

श्रीविद्यानाथ झा

॥ श्रीगणेशायनमः ॥

# ॥ भक्तानन्द तरङ्गिणी ॥

राधामाधुमनोमधुव्रतकृतस्वादप्रमाध्वीरसं
ध्यानं मोहवशप्रपञ्चनियतव्यासङ्गभङ्गक्षमम् ।
भक्तत्राणपरायणं श्रुतिनुतं लब्धार्थसीमा सतां
कृष्ण ! त्वच्चरणारविन्दयुगलं स्वान्ते ममावर्तताम् १

व्याप्तोऽसि नाथ ! हृदये भवतां जनानां
यत्त्वद्भुतं परिचिनोषि न तत्पलम्भम् ।
यत् स्वीयसञ्चितशुभाशुभकर्मबन्धं
दत्वाऽऽनयन्ति भवतः शुभमोक्षलक्ष्मीम् ।२।।

अर्थाशया नृपजनेषु मम प्रयुक्ता
वाणी वधूरिव महाव्यभिचारदुष्टा ।
शुद्धिं प्रयाति जगदीश ! परस्य पुंसः
सङ्गेन तेऽद्भुतमिदं प्रतिभाति लोके ।।३।।

सर्वाधिपत्यमभिलक्ष्य धराधिपत्यं
संलिप्सवो विषयिणः समुपासते त्वाम् ।
तेभ्यः प्रयच्छसि फलं तु हरे प्रयुक्तं
संसारतो हरसि तत्स्वजनाधिपत्यम् ।।४।।

देहाभिमानविधुरो ऽभिहितो न जीवो
देहप्रियः सपदि कामयते न मुक्तिम् ।
मुक्तिप्रदोऽसि भगवन्! स्मृतिमात्रतुष्टः
सेवेत कः कथय ते चरणारविन्दम् ॥५॥

त्वन्नामसुन्दरसुधारसमत्तभक्तो
भक्तिं विहाय सहसा न वृणोति मुक्तिम् ।
नान्येन सापि सुलभा भगवन्ननाथा
हा हन्त रोदितु चिरं ननु मुक्तिलक्ष्मीः ॥६॥

यः स्वात्मनो मलिनता मपनेतुकाम
स्त्वामाश्रितो भवति माधव! दत्तचित्तः ।
आशां जहत् स विविधोहितवस्तुशुद्धेः
सम्पद्यते पुनरहो वपुषाऽपि कृष्णः ॥७॥

जीवः स्वयं कठिनमोहनिशाप्रसुप्तः
सम्बध्यते कथमसौ गुणदोषजालैः ।
निर्दोषबन्धनरसं भजसे कृपालो
कस्त्वां प्रबोधयतु कर्मगतिज्ञमीशम् ॥८॥

वाचोऽपि गोचरयितुं प्रभवन्ति न त्वां
पन्थानमेष्यसि कथं खलु चक्षुषो मे ।
हानिर्न मे तदपि वाञ्छितदानदक्षं
त्वत्पादतीर्थमुपलप्स्यत एव लोके ॥९॥

स्वान्तालये वससि नित्यमुपोषित स्त्वं

सत्कारभङ्गजनितो ननु मे कलङ्कः।
तन्न् प्रेमपूरित मिदं हृदयं विधेयं
प्रेमाशनं स्वमथवा जगदीश! हेयम्॥१०॥
व्यामोहमार्ज्जनकृते तव सन्निधानं
सम्भावयन्ति ननु ये भ्रम एव तेषाम्।
यद्भोगलिप्सुगम मीश्वर सन्निकृष्टा
संरुन्धती खलु विमुह्यति योगमाया॥११॥
त्वं कुन्तलैककुटिलः शुभलक्षणाङ्कः
प्राप्तोऽसि नाथ! भुवनत्रयराज्यलक्ष्मीम्।
सर्वात्मना पुनरहं कुटिलोऽद्वितीयो
हा हन्त मे न शरणं भुवनत्रयेऽपि॥१२॥
वंशीकलध्वनिसुधाक्षणपानभाजं
वृन्दावनं व्रजवधूजनमन्वकृष्टाः।
चित्रं त्वदुद्भवकथामृतपानचुञ्चु
स्त्वामेव नित्यमनु कर्षति चित्तभूमिम्॥१३॥
बद्धाय नेच्छसि हरे! सहसा प्रदातुं
मुक्तिं म साम्प्रतमिदं परिणामदर्शी।
यत्प्रेमबन्धनवशात् स्वयमेव पश्चाद्
बद्धोऽवतारजनितं भजसेऽति दुःखम्॥१४॥
मत्वोपयोगमधिकाधिकमर्थसिद्धौ
दत्तं मनो यदुपने ऽयमनुग्रहस्ते।

आपल्यतः परमिदं कुरुते विलोमं
तत्त्वं निवर्तय मवा स्वमिदं गृहाण ॥१५॥
लक्ष्मीपते ! वपुरिदं भवता प्रदत्तं
धर्म्मैकहेतु मधिगम्य मया गृहीतम् ।
रक्ष्यं न तच्च तव भक्तिपराङ्मुखत्वा
ज्ज्योतिर्मये त्वयि हुताशन आजुहोमि॥१६॥
वित्तं न मे किमपि सम्मतदानयोग्यं
चित्तं च मे तदपि दुर्व्यसने प्रसक्तम् ।
सर्वोत्तमर्ण ! भवतः खलु नानृणी स्यां
भक्तिप्रदानविधया ऋणमुद्धरस्त्वम् ॥१७॥
कृष्ण ! त्वमेकवपुषा प्रतिभासि कृष्णः
शश्वत् सुरक्षसि समस्तमिदं हि विश्वम् ।
वाक्कायकर्मभिरहं मनसा च कृष्णः
स्वस्यापि रक्षणमहो मम नैव साध्यम् ॥१८॥
तुभ्यं ददामि नियमेन मनः प्रसन्नं
नीत्वा प्रयाहि तरसा कुरु मा वितर्कम् ।
दत्वा स्वचञ्चलमनांसि मम त्वदीयं
गृह्णन्ति ये तदुपधारपथच्युतोऽहम् ।१६॥
विश्वं सृजस्यवसि संहरसी हमन्ये
नार्हन्ति नाथ ! भवितुं श्रुतयः प्रमाणम् ।
कारुण्यपूर्णो पुरुषो नहिं कोऽपि कुर्या

दायभ्तदु:खचयसम्पुटपातहित्साम् ॥२०॥
कंसादिवीरविनिपातमतोऽपि नूनं
कण्डूयनं स्वभुजगोर्भ निपातितं स्यात् ।
तन्मेऽतिदुर्दमरिपुं विषयाभिलाषं
तूर्णं निपातय यदीच्छसि तन्निपातम् ॥२१॥
आत्मान मावरणवर्ज्जितमप्रमेयं
प्रायो निभाल्य हृतवानपि गोपिकानाम् ।
वासो मितं तदपि ते न मनीषितोऽर्थ
स्तन्मेऽमितं मतिविभेदपटं मुषाण ।२२॥
विश्वम्भर स्त्वमसि केवलमर्थगत्या
नाम्ना तु सन्ति शतशो भुवने पुमांसः ।
तन्न प्रार्थये सविनयं सततं नत स्त्वां
गोपाल ! पालय भवग्रहबाधितं माम् ॥२३॥
अन्धन्तमः समुपजीव्य ममाविवेकं
कामादयः प्रतिवसन्ति तमोविकाराः ।
भक्ति स्तवांशुरमणी भजते विभक्ति
विद्योतसे हृदि तथापि न चक्रपाणे ! ।२४।
भारं विनेतु भवने रवतारभारो
नायातु ते पुनरतः प्रतिबोधयामि ।
अत्राहमस्मि गरुड़ध्वज ! भारभूतो
नोचेत् प्रयच्छसि रतिं निजपादपद्मे २५॥

त्वं पूतनास्तनगतो ननु कालकूटः
पीत स्त्वया सकृदतो नवनीतचौरः ।
संसारसङ्गविषदुस्सहतापखिन्नः
मामोऽस्म्यनन्यशरणः किमुपेक्षणीयः २६॥
आपन्निवृत्तिपरिबोधवचःसहस्रैः
स्वास्थ्यं तवाप्यनुदिनं कवलीकरोमि ।
तन्नाथ ! चिन्तयसि चेदुभयत्र भद्रं
जह्यापदोघजननीं विततामविद्याम् ।२७॥
इष्टाप्तिसुस्थिरमनाः समदृष्टिनाम्ना
मन्दादरः सुगमभक्तिपथानुवृत्तौ ।
त्वद्भक्तवत्सलपदं प्रतिपद्य पश्चात्
तोषातिरेकभरितं प्रणिधानमेति ।२८॥
कृष्ण ! त्वदङ्घ्रिसरसीरुहनित्यभक्तः
मामो जरत्त्वविपदं भजनैरतुमः ।
मन्ये पुनर्ज्जननूतनविग्रहार्थी
पञ्चत्वमर्थयति भीतिमचिन्तयित्वा ।२९॥
आनन्दलोलुपधियः सुधियः समस्ता
माशामसाम्प्रततया श्लथयन्ति सद्यः ।
एकान्तकान्तकरुणावरुणालयं त्वा
माशासते जहति कर्मफलाभिसन्धिम् ।३०॥
त्वं कामधेनुरिह केऽपि न सन्दिहाना

यद्गोपिका भिरखिलाभिमतानदुग्धा । 
मन्ये त्वदंघ्रिसरसीरुहभक्तिशिक्षां
ता एव पूर्वकृतपूर्णतपोभिरापुः ॥ २१ ॥
कृष्ण ! त्वदीयचरितामृतपानभाजो
नानामुखा अपि भवन्ति न तृप्तिभाजः ।
एकं मुखं वरमनो यदि नैव तुल्यं
वक्त्रस्य मे कटुकथाविशिखालयस्य ॥२२॥
अन्यान्यभारमपनेतु मुदारभावा
मन्ये वहन्ति विषमं तव भक्तिभारम् ।
यत्तं त्यजन्ति फलभारमवाप्य केचिद्
ब्रह्माण्डभार मपरेव वहन्ति पश्चात् ।२३॥
सन्देहदूषितधियामपि भक्तितन्त्रे
कल्याणचिन्तनपरः करुणामय त्वम् ।
भक्तः स्वयं शिवमिषेण निदर्शनार्थं
सिद्धिं गतोनयसि भक्तिपथं पुनस्तान्।२४॥
संसारवारिधिसुखोत्तरणाभिलाषी
त्वत्पादपद्मतरणौ चरणौ न धत्ते ।
चित्तं निजं हि मुदितं निबिड दधानः
पारं प्रयाति पुरुषः परिशुद्धचित्तः ॥२५॥
भूभारवारणकृते कृतजन्मनस्ते
किं वर्णयामि शरणागतवत्सलत्वम् ।

यद्वासुदेव ! मुनिशापमिषेण मान्यान्
स्वान् यादवानपि निपातितवानसि त्वम् ।३६।।
त्वां निर्विकारमवगोऽक्ष्य निकृष्टबुद्धि
र्जारं परं वदति गोपवधूटिकानाम् ।
तस्मै प्रह्लादमुखिता परितोषशक्तिः
किम्वा नृसिंहवपुषा हननेन मुक्तिः ३७।।
स्वर्गादुद्धरणदुर्गतितारणादि
प्रत्यक्षयोगसमवायनिबन्धन स्त्वम् ।
पुत्रः पिता सुहृदसि प्रवदामि किं त्वां
सेव्योऽसि गाढ़मनसा मम योऽसि सोऽसि।।३८।।
ओमित्युदाहरणमेकमवेतुमर्थं
नालिङ्गितं विविधतन्त्रमधीतवन्तः ।
लब्धश्रमाः सुकृतिनो भवतोऽनुकम्पा
माशासते खलु तथापि समस्तमागम् ।।३९।।
त्वत्पादपद्मतुलसीदलमेव भक्त्या
भुक्तं सदा निकटयत्यनुचिन्तितार्थम् ।
कंचाञ्चिदेव भुवि भाग्यवशोपलब्धं
चिन्तामणिं न गणयामि ततोविशिष्टम्।।४०।।
लोके प्रभूतबलकः प्रभुशब्दभागी
दास स्तदूनबलकः कथितोऽभियुक्तैः ।
स्वामी समानबलकः कथमीश्वर ! त्वं

भक्तो यत स्तव फलग्रहणे स्वतन्त्रः ।४१॥

य स्त्वानुरञ्जयति काप्यनुरागरागै
स्तं तैः सुरञ्जयसि नाथ ! निजैर मृज्यैः ।
युष्मद्विचेष्टितविडम्बनमेव मन्ये
क्रीडामहोत्सवतिथाविहनागराणाम्॥४२॥

दोषज्ञतां वितनुते प्रथमं समन्ता
न्नानारसाननुभवन् विषयोपपन्नान् ।
पाश्चात्यरोगमपहर्तुमनाः पुनस्त्वा
मानन्दमेकरसमर्थयतेऽतिनीचः ॥ ४३ ॥

संसाररोगपरिहारविधिर्नसङ्क्र
कृष्ण ! श्रुतौ कठिनकर्मकलाप उक्तः ।
वैयर्थ्यमेति तव नाम सुधामयं य
न्नानामय जगति हन्ति समूलघातम् ॥४४

यातेऽपि लोचनपथं त्वयि सर्वमृग्ये
भक्ति र्दृढाऽस्तु न पुन स्तदपायतर्कः ।
यत्त्वामुदीक्ष्य कतिचिन्मुनयः कृतज्ञाः
स्त्रीत्वं जुगुप्सितमपि प्रणयेन बब्रुः ॥४५॥

दत्तं हुतं सुचरित चरितं मया य
न्नान्यत्फलं फलतु तत्परमाणुमात्रम् ।
आत्यन्तिकीं त्वयि रतिं प्रतिपाद्य नित्यां
श्रीवत्सलाञ्छन! पुनः कृतकृत्यमास्ताम् ४६

सम्बोधयन्निजसुतं खलु दारनाम्ना
नीचो जनोपि भजते महतां समत्वम् ।
चित्रं तु यः कलयति प्रतिनामगाथां
साम्यं त्वदीयमवमन्य वृणोति दास्यम् ॥४७

दातुं मति स्तव हरे ! यदि नैज दास्यं
तर्ह्यायुषः प्रथमतः स्थिरतां विधेहि ।
नो चेद्दभ्रविषयव्यसनोपयुक्तं
शेषं प्रयात्वचिरमेव चिरं ममायुः ॥४८॥

रक्षोगणैः परिवृतः किल नागलोको
मर्त्योहि मृत्युकवलीकृत एव शश्वत् ।
स्वर्गोप्यधःपतनदोषयुतो न जाने
भक्तोजनः क्व भविष्यति लब्धभूमिः ॥४९

कर्णौ त्वदीयचरितश्रवणानुरक्तौ
स्यातां नचे द्बधिरतामधुनैव यातम् ।
किं सर्वथा भवनदुस्सहदैन्यवार्तां
विज्ञापनाय विहितौ भवता विधात्रा ॥५०॥

कामाग्नितापहरणाय नितम्बिनीना
मालिङ्गनं त्वगिह कामयते जडत्वात् ।
त्वत्पादशीतसलिले सुरनिम्नगाख्ये
स्नात्वा यतो हरति नैव समस्ततापम् ॥५१॥

अन्याङ्गनामुखविलोकनलोलचक्षु

स्त्वामीक्षितुं रुचिविपर्य्ययमागतं चेत् ।
अंधत्वमेव परिकल्पय शान्तिचूर्णं
किम्वाऽभितःस्वचरणाम्बुजदिङ्निरोधम् ॥५२॥

सृष्टं नृदेहजड़यंत्र मिदं विचित्रं
यत् प्रत्यहं सृजति चित्रितकर्मसूत्रम् ।
यत्कर्मसूत्रवशतो नटतां स्वतन्त्रः
कर्त्ता हरे ! नटयिता त्वमसि प्रसिद्धः॥५३॥

नैष्कर्म्म्यसिद्धि सदनं यदिवा भवेयं
स्वर्गे सुरेन्द्रभवने यदिवा वसेयं ।
निस्सीमकष्टनिरये यदिवा पतेयम्
गोविन्द ! नामन पुन स्तव विस्मरेयम्॥५४॥

पीयूषतोऽप्यधिरसं श्रुतिसारतत्वं
कृष्णेतिनाम ललितं रसितं कदाचित् ।
तत्पुण्यपुञ्जफलमिच्छति मे रसज्ञा
राधेश!तद्रसनमेव तथैव भूयः ॥५५॥

ग्राहाभिभूतगजपुङ्गवमोक्षकीर्त्ति
र्लोके तवातिविततता किमु किम्वदन्ती ।
एकान्तकर्कशबृहद्विषयानुराग
ग्राहाभिभूतिविकलं यदुपेक्षसे माम् ॥५६॥

लक्ष्यापमुक्तविशिखेन निकृत्तमर्मा
नापुण्यकृज्जगति मृत्युमुपैति नोचेत् ।

राधामुखाधरसुधारसपानधन्यो

हन्तुं न कालयवनं कथमाविरासीः ॥५७॥

त्वां वीक्ष्य कोटिमदनछविमुन्मदानां

कासां स्पृहा न मथुराश्रितसुन्दरीणाम् ।

तासां कटाक्षशरपातशतं सहिष्णोः

कुब्जाकटाक्षविशिखः खलु दुस्सहस्ते॥५८॥

एवं निर्गुणोऽपि गुणिनां प्रथमप्रतिष्ठा

मारूढवानिव बुधैः परिलक्षितोऽसि ।

यत्पुण्यकीर्तिरजनीकरचन्द्रिकाभि

र्लोकत्रयं धवलितं भवता व्यधायि ५९॥

संसारकाननविहारसुखीनृपोऽहं

यद्यस्मि किञ्चिदपराधवशेन दण्ड्यः ।

आबध्य भक्तिनिगडैरपनीय सर्वं

बृन्दावने घटय माधव ! मामजस्रम् ॥६०॥

कुक्षौ निवेशयसि विश्वमिदं शयानो

न त्वां जनो वदति किञ्चिदपि प्रतीपम् ।

भोगे रतिः किमधिकाधिकमोदकानां

लम्बोदरं वदति नाथ! यदेकदन्तम् ॥६१॥

नाम्नापि भीतिविगमः परमेश्वरस्ये

त्यालोच्य पादसरसीरुहमाश्रितानाम् ।

जायेत साध्वसपदं खलु पक्षता चेद्

भूयोन सा भवति नाथ ! यतस्त्वदाप्तिः ॥६२॥

काले अहासि कमलां कमनीयशीलां
भक्तापदः सपदि नाशयितुं विचिन्तः ।
सर्वं शृणोमि चरितं तव दुर्विभाव्यं
विस्मारयत्यहह ! पातकमन्तरायः ॥६३॥

पापीयसां सुखलवस्थलभावबाधो
नाम्नोदितेन भवतो नरकेऽपिरोधः ।
नारायणेतरगतिः सकला निरस्ता
कृतां स्वगृद्धगणिकागति रेव दातुम् ।६४॥

नाम्नातिदुर्विधसखाय हरे ! सुदाम्ने
लक्ष्मीमदाः पृथुकतण्डुलमुष्टितुष्टः ।
यः श्रद्धयाऽर्पयति दीव्यमनेकभोगं
तस्मैकिमस्तिभवताऽप्रतिपादनीयम् ॥६५॥

राधान्वितो विहर मे हृदये कुटीरे
वैचित्यमावरणमत्र कुतोऽन्यथासः ।
वाणी मिमामव हरे ! नयगर्भगुर्वी
सर्वावनं यदिह पर्य्यवसानमेति ॥६६॥

पापीयसामिह विलुम्पसि पापराशिं
त्वं पापमोचन इति प्रथितोऽसि लोके ।
तेषां विभो मम पुनः प्रथमस्य कस्मात्
पापं न लुम्पसि यतो विचरामि दीनः॥६७॥

दण्डोऽप्यनुग्रह इतिस्थितिमेव मत्वा
सर्वाधिपस्य तव कर्मकरा न भीताः ।
निःश्रेयसं परमवेतनमर्ज्जयन्तो
यन्नाचरन्ति भुवि कर्म यथोपदिष्टम् ॥६८॥

रामायणं भुवनपावनमेव कर्तुं
रामो भवँस्त्वमकृथा वनवासयात्राम् ।
नोचेद्द दशाननवधे जगदीशितु स्ते
भ्रूभङ्गमात्रमपि भूरितरप्रयासः ॥ ६९ ॥

आराधित स्त्वमिह यच्छसि कांक्षितार्थं
दानं निरूपयसि सात्त्विकमर्थशून्यम् ।
अन्योपदेशविषये सुकरं सुधीनां
पाण्डित्यमेतदुदितं न मृषा करोषि ॥७०॥

दुर्बोधकारणवशादहमुत्पथस्थो
येनासि नाथ ! कुपितोऽतितरां मयि त्वम् ।
तद्बुद्धिमेव न कुतः प्रददासि पण्डा
धर्म्मव्यतिक्रमकृतो न पुनः प्रकोपः ७१॥

भक्तो भवामि तव भक्तपरम्पराणां
विज्ञापना ऽच्युत ! नमे विफलाऽस्तुकाचित् ।
सर्वानुबृत्तिमपनीय निजानुबृत्तिं
श्रेयोनिदानमविलम्बितमेव देहि ॥७२॥

शश्वन्नवीनतनुपिञ्जरसन्निवेशैः

क्रीडाशुकस्य तव भूरितरव्यथा मे ।
तत्स्वीयसुस्थिरपदाम्बुजपिञ्जरान्ते
तूर्णं निवेशय न जातु विसर्पशङ्का ॥७३॥
इष्टार्थपूरणसुरद्रुममद्वितीयं ।
निस्सीमनिर्भरविकीर्णरुचिं त्वदीयम् ।
श्यामं वपु श्चिरपिपासितलोलचक्षुः
पातुं व्यवस्यति नचेत् तव वञ्चितोऽहम् ।७४॥
कृष्णार्चिताय भवते परमाणुकल्पं
विश्राणितं भवति भूधरकोटिकल्पम् ।
पश्यन्ति नैव वणिजो हतभागधेया
वाणिज्यलाभमिव भूमिनिखातरत्नम् ।७५॥
स्वार्थं परार्थ मथवोभयमेव मत्वा
सृष्टं त्वया वपुरिदं जगदीश ! नूनम् ।
तत्सर्वसाधकतमे निजभक्तिकार्य्ये
नैनन्नियोजयसि तत् त्वमसि प्रणम्यः ।७६॥
शश्वत्समानतरुवासविलासभाजो
प्याकस्मिकभ्रमवशाद्द भ्रमतोऽतिमात्रम् ।
त्वं मे सुहृत् परमकारुणिकः समर्थो
लक्ष्योऽसि हन्त न कथं भ्रममुच्छिनत्सि ।७७॥
कृष्ण ! त्वदीयपदपद्मजुषां जनाना
मन्तस्तमो हरसि नेति परोपकारः ।

सम्भावयामि समये नवनीतचौर्य्ये
गोपाङ्गनानयनरोधनसाधनं तत् ॥७८॥
कृष्ण ! त्वया कलयता करुणानिधित्वं
किं स्वीकृतं हृदि विविच्य जनार्द्दनत्वम् ।
तत्रापि हन्त ! पुरतो निजपादभक्ता
स्तिल्लक्ष्यकुक्षिषु कृता इति नैव सह्यम् ।७९॥
जीवन्नरो भजति भूरितरं यदि त्वां
कालेन याति कियता जगदीश ! मुक्तिम् ।
त्वत्पादपद्मजलमेव वृतो हि मान्यं
यत्रास्थिपातवशमोक्षगति स्तिरश्चाम् ॥८०॥
गोसेवनं श्रुतिमतं सह गोपवृन्दै
र्मत्वा वने विहरता चरितं मयाऽपि ।
वैगुण्यमत्रहि जितो भवताऽरिवर्गो
मां सर्व एव जयति प्रतिपत्तिहीनम् ।८१॥
मन्ये दिवःनिश मनुक्षण मेधमानां
त्वं सस्मितोऽपि कलयन्नपराधसंख्याम् ।
रोष स्तवोचितविधिं विदधातु नूनं
मन्दस्मितं दिशतु केशव ! कान्तितं मे ।८२॥
यावद्विभोनतवपादसरोज युग्म
प्रेम्णा व्यवस्थितमतिः सचते प्रकामम् ।
तावन्न संसृतिसमन्वितवस्तुवृन्दे

निस्सारताग्रहलवोऽङ्कुरता मुपैति ॥८३॥

अप्राप्तिदुःखनिचयेन विधूतपापाः
सम्प्राप्तिसौख्यनिचयेन विधूतपुण्याः ।
त्वां श्यामसुन्दर ! मुहुः परिचिन्तयन्त
श्छिन्दन्तिसञ्चितशुभाशुभकर्मजालम् ।८४॥

दुर्भाग्यभारतजनि सुरमाननीयां
तत्रापि मानववपुः पुरुषार्थकर्षि ।
आसाद्य जीर्णयति य स्तव भक्तिलीनो
मान्यः स एव सुमतिश्शुभदर्शनश्च ।८५॥

वित्तं त्यजन्तु गणिकाभवनेऽपि मूढा
श्चित्तं त्यजन्तु भवत श्चरणारविन्दे ।
नित्यं व्रजन्तु वसुधाधिपगौणगोष्ठीं
सत्यं भजन्तु तव नाम न कापि भीतिः ॥८६॥

स्नानं त्वदीयसलिले तव नामपानं
गानं त्वदीयचरितस्य विसृज्य मानम् ।
दानं त्वदीयपुरुषे परिपूर्णमानं
ध्यानं त्वदंघ्रिकमलस्य गतेर्निदानम् ।८७॥

आनन्दकन्दमतिभक्तमिलिन्दमाद्यं
पादारविन्दमरविन्दहगन्तरेण ।
प्रेमास्पदं किमपि यद्यपि मे न लक्ष्यं
संलक्षितं किमपि ते तदपाकुरुष्व ॥८८॥

सर्गावनप्रलयकर्मसु चक्रपाणे !
नैसर्गिकं तव सुरक्षणमस्ति कार्य्यम् ।
भक्तोऽसुहृन् परिचये यदि वा तटस्थो
सर्वानने मधुर एव यथेक्षुदण्डः ॥ ८९ ॥

साम्राज्यमाप्य भवतः सुखसङ्गदस्मो-
दुःखाय केवलमहं जगतो भवेयम् ।
प्रीतोऽसि चेन्मयि हरे ! शतजन्मतोऽपि
क्लिष्टं प्रदेहि निजपादसरोजदास्यम् ।९०॥

किं युक्तिमार्गणशतैः परमात्मन 'स्ते
सम्बोधनाय तव भक्तिपथच्युतस्य ।
त्वत्ख्यातये प्रबलतर्कपथप्रसक्तो
न त्वां निरूपयति नाथ ! यथा हि भक्तः॥९१॥

उत्फुल्लनीलसरसीरुहचारुकान्ति
र्वंशीधरः परिकरीकृतपीतवासाः ।
त्वं गोपिकानयनपङ्कजपूजिताङ्गो
दृग्गोचरो भवसि यस्य तमेव वन्दे॥९२॥

सङ्कल्पजालपिहितामपि भक्तिभूमिं
ये नाश्रयन्ति विषयेषु निरूढचित्ताः ।
आस्तां सदैव मधुसूदन ! तद्वियोगो
यद्भक्तियोगमपकर्षति नीचसङ्गः ॥९३॥

त्वद्भक्तिनिर्भररसानुभवप्रवीणो

वीराग्रणीः किल बभूव बलि र्महात्मा ।
य स्त्वीयराज्यमखिलं निखिलेश ! तुभ्यं
दत्वा रसातलपुरं स्वय माजगाम॥६४॥
स्वाहारसाधनविधि र्भजनान्तरायो
व्याप्नोति कालमिति कापुरुषापलापः ।
जानन्ति किन्न भवता परमेश्वरेण
स्तन्यं स्तने सुनिहितं पुरतो जनन्याः॥६५॥
वालः क्षमो न भजने स्तनपानशाली
मायांविमोहितयुवा स्तनमानशाली ।
वृद्धोऽपि कालवशतः शिशुधर्मशाली
नोचेत् कृपा तव हरेऽखिलकालकाली ६६
चित्ते न चिन्तय विभो ! मयि जातु दोषं
मां मंक्षु पालय यतः समदर्शन स्त्वम् ।
स्पर्शो मणि र्यदशुचित्व मुपेक्षमाणो
लोहं यथा नयति काञ्चनतां क्षणेन ।९७॥
ननु हरसि दयालो ! चेदविद्यां मदीया
महमपि तव भक्तिं वैरिणी मानयामि ।
अनुचितमुचितम्वा मद्वचो रक्षणीयं
भवति न भविता नौ योनिजालेऽवतारः॥६८॥
सर्वज्ञः परिगीयसे श्रुतिमुखै र्नारायणस्त्वं सदा
वक्ष्येऽहं विपरीतमेव भगवन् ! तन्मेऽपराधो नचेत् ।

युक्तायुक्तविचारणा ननु न ते सर्वज्ञता कीदृशी यन्नामग्रहणेन नीचपुरुषैः प्राज्ञैरिव प्राप्यसे ॥९९॥

आदिस्त्वं जगतांपुराणपुरुषोऽनादिः स्वयं निर्गुणः सर्वात्मा परमेश्वरोऽखिलगति स्तेजोनिधि श्चिन्मयः । क्षोणीभारहरो महाभयहरो राधाधवो माधवः स्वां मायां व्यवधाय धावयसि मां क्रीडाकरोषिध्रुवम् ॥ १०० ॥

प्रयातृणामूर्ध्वं विषयसुखतृष्णाहृतधिया मधस्तुण्डं कुण्डे भवति पतनं त्वां तु भजताम् । अधोगानामूर्ध्वं पुनरिह परं धाम सुलभं हरे ! कोऽयं योगो जगति विषमो दुर्नयविधौ ॥१०१॥

इष्टार्थप्रतिपादकेऽपि भवतां नामन्युपेक्षाश्रिते कस्मादीश ! विवेकरिक्तहृदये वैधुर्यमिष्टाशिषाम् । आपन्नं तदवेतिदुर्बलधियां शङ्कारुजोन्मूलनं कार्पण्यं वचसो हि कस्य घटते कार्यं नु वा कारणम् ॥ १०२ ॥

सततनिगमगीयमानकीर्ते
स्तव पदवी नहि रोचते खलेभ्यः ।
अतिपरिचयजन्यमानमान्द्यं
भवति यथा महतामसभ्यगेहे ॥१०३॥

स्ववचनमनृतं करोषि भक्त

प्रहितवचःप्रतिपालनाय भूयः ।
तुलयसि लघुना महार्घमर्थं
त्वमिव हरे! त्वमिहासि चित्रचर्य्यः ।१०४॥
नियतविषयभारभूरिखिन्नं
यदपि मनो न तथापि मे विषादः ।
सकृदपि तव पादपद्मयुग्मं
नमति हरे! ध्रुवमस्य भारभङ्गः ॥१०५॥
क्व नु कृतवसति र्बलाभिमानो
मनुजशुभामिषमत्ति मत्कुण स्ते ।
परिचयकृपणा मनुष्यजातिः
किमिति न पश्यति चर्मचक्षुषैव ॥१०६॥
पशुरिव बलिदानसन्निकृष्टः
श्रयति जनो विषयोपभोगचेष्टाम्
यदि तव करुणा न जायमाना
कथमिह पश्यतु कालपञ्जजीवः॥१०७॥
परिचयपथमेति नैव किञ्चि
च्चरितचमत्कृति रीश्वरस्य पुंसाम् ।
सुरपतिरपि नाथ! यद्विपन्नो
नरपतिवाहनतामुरीचकार ॥ १०८ ॥
यदवधि पटुता चलेन्द्रियाणां
तदवधि कर्म हितानुबन्धि चिन्त्यम् ।

प्रभजतु जनता तदाशु कृष्णं
प्रथयतु पार्थ इवार्थसार्थसिद्धिम् ॥१०९॥
उपेक्षमाणोऽप्युदये पुन स्त्वां
प्रपद्यमानः परिभूतिसङ्गात् ।
स पूर्वरूपं लभते विशिष्टं
दयालुता ते पररूपगम्या ॥ ११० ॥
न मादृशः कोऽपि महापराधी
भवादृशो नैव महासहिष्णुः ।
परस्परस्मिन्नपि युज्यमानो
महत्वयोग स्त्वयि याति शोभाम् ॥१११॥
विभजने वपुषो यदि पापिनो
भुवि गृणन्ति सुधोपमनाम ते ।
इह तरन्ति जना यमयातना
मनुभवन्ति भटा हरियातनाम् ॥११२॥
तव हरे ! महिमानमुदीरितुं
त्रिभुवने खलु कः कुशलः पुमान् ।
विरहितः श्रवणेन शृणोषि य
न्निखिलभक्तजनप्रणयं सदा ॥११३॥
अपारसंसारपयोधिपारं
यियासुभिः शश्वदुदीर्य्यमाणः ।
असारसंसारविचारभूमिः

कृष्णेतिशब्दः स्त्वदतां सदा मे ॥११४॥
राधैव बाधते बाधां त्वत्पादाम्बुजसेवने ।
राधेतिकीर्त्यते येन कृष्णकीर्तनतः पुरः ॥११५॥
सतां सौभाग्यसर्वस्व मानन्दार्णवमज्जनम् ।
बाधासमूहशमनं राधाकृष्णविचिन्तनम् ॥११६॥
संसारबीजशमनं नरकव्याधिभेषजम् ।
शृण्वतां श्रोत्रपीयूषं राधाकृष्णेतिकीर्तनम् ॥११७॥
क्षमः कथमिह स्तवे परिचिनोमि न त्वामहं
मिलन्ति सनकादय स्तदधिकारिणो ज्ञानिनः ।
तदत्र विषये वृथा यदपि मादृशां साहसं
प्रदेहि नमने रतिं सकलदोषसंहारिणीम् ॥११८॥
अणोरणीयान् महतो महीयान्
ब्रह्माण्डगर्भोऽखिलचित्तगर्भः ।
निरस्तजन्माप्यसि दृष्टजन्मा
नमो नमस्ते पुरुषोत्तमाय ॥११९॥
सीतारामपदाम्भोजध्याननिर्धूतकल्मषः ।
वेदवेदाङ्गमर्मज्ञो हर्षनाथात्मजः सुधीः ॥१॥
नाम्ना गोवर्द्धनो विप्रो मैथिल स्तस्य सूनुना ।
विद्यानाथेन विदुषा परमारानिवासिना ॥२॥
चन्द्राद्रिग्रहचन्द्राख्ये वैक्रमेऽब्दे विनिर्म्मिता ।
अक्षयायां तृतीयायां माधवे धवले दले ॥३॥

अन्वर्थभूषिता भव्या भक्तानन्दतरङ्गिणी ।
राधेशभक्तिदा राधामाधवाभ्यां समर्प्यते॥४॥

इति दरभङ्गा मण्डलान्तर्गतपररमानाग्राम निवासि
पण्डित गोवर्द्धनशर्मसूनुना उन्नाव खत्री
जातीय संस्कृतपाठशाला प्रधानाध्यापक
व्याकरणतीर्थोपाध्याय झोपाख्य
श्री विद्यानाथ शर्मणा विरचिता
भक्तानन्द तरङ्गिणी
समाप्ता

